इति विसृष्य एकान्तभङ्गं कृतवति लक्ष्मणेऽन्तर्हिते च मुनिरूपे काले रामेणापि अभीष्टदानेन सन्तोष्य प्रस्थापिते दुर्वाससि, लक्ष्मणेन स्वबधे प्रतिज्ञापूरणार्थं याचिते रामवृत्तान्तः।

निखिलमुनिवचोभिस्त्याग एवास्य बन्धोः
बध इति स विचार्य्य स्थैर्य्यवान् रामचन्द्रः।
असुचदथ सुमित्रापुत्रमात्माधिकं तं
न हि किमपि गरीयो वाक्यतो ह्युत्तमानाम् ॥ १४२ ॥

तेन त्यक्तः स्वीयदेहोपयोगात् प्रीतो योगाल्लक्ष्मणोऽङ्गं विमुच्य।
सद्यः स्वर्गं पूजयमानः स लेभे सत्कर्म्मा हि श्रेयसामेव भागी ॥१४३॥

---

कुलं तिष्ठतु, कुलध्वंसो मा भूदिति भावः। अहं पुनः अमुं देहं विमुच्य त्यक्त्वा राज्ञः प्रतिज्ञां पूर्णां सत्यामित्यर्थः, करवै करवाणि इत्यर्थः, यतः परार्थो पररक्षार्थो बधः, आत्मन इति शेषः, श्लाघ्यः प्रशस्यः। सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १४१ ॥

निखिलेति। अथानन्तरं स स्थैर्य्यवान् सुधीरो रामचन्द्रः निखिलानां सर्वेषां मुनीनां वचोभिः वचनैः अस्य बन्धोः भ्रातुः त्याग एव बध इति विचार्य्य आत्माधिकं प्राणाधिकं तं सुमित्रापुत्रम् असुचत्। हि तथाहि उत्तमानां महतां जनानां वाक्यतः वचनात् किमपि गरीयः अतिशयेन गुरु न हि नैव भवतीत्यर्थः। मालिनी वृत्तम् ॥ १४२ ॥

तेनेति। सः लक्ष्मणः तेन रामेण त्यक्तः स्वीयस्य देहस्य उपयोगः प्रयोजनं यस्मिन् तस्मात् योगात् समाधेः, योगमास्थायेत्यर्थः, यबर्थपञ्चमी, प्रीतः प्रसन्नः, अनाकुलचित्त इत्यर्थः,

ततश्च लक्ष्मणे स्वर्गं गते रामभरतयोरुक्तिप्रत्युक्ती ।

भरत ! कलय राज्यं, देव ! मैवं, प्रवीरे
तव तनययुगेऽस्मिन् युज्यते राज्यलक्ष्मीः ।
अयमहमनुयास्याम्येव शत्रुघ्नयुक्तः
तव चरणसरोजं नाथ देव ! प्रसीद ॥ १४४ ॥
इति भरतवचोभिर्विस्मितोत्फुल्लचेताः
कुशलवकरपद्मे राज्यलक्ष्मीं निधाय ।
सहगमनसमुत्कैर्याचितो लोकवृन्दैः
अतिसकरुणचित्तस्तांस्तथैवानुमेने ॥ १४५ ॥

---

अङ्गं शरीरं विमुच्य विहाय सद्यः सपदि पूज्यमानः, सुरैरिति शेषः, स्वर्गं लेभे प्राप । हि तथाहि सत्कर्मा सच्चरितः जनः श्रेयसामेव सन्ततीनामिव भागी, भवतीति शेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । इन्द्रवज्रा वृत्तम् ॥ १४३ ।

भरतेति । हे भरत ! राज्यं कलय गृहाण । इति रामोक्तिः । हे देव ! मा एवम् एवं मा वद इत्यर्थः, प्रवीरे, विनीते इति वा पाठः, अस्मिन् तव तनययुगे पुत्रयुगले राज्यलक्ष्मीः युज्यते सङ्गच्छते, ज्येष्ठवंशानुसारिणी हि राज्यलक्ष्मीरिति भावः । हे नाथ ! अयम् अहं शत्रुघ्नेन युक्तः सहितः तव चरण-सरोजं पादपद्मम् अनुयास्याम्येव अनुगमिष्याम्येव । हे देव ! प्रसीद प्रसन्नो भव । मालिनी वृत्तम् ॥ १४४ ॥

इतीति । इतीत्थं भरतस्य वचोभिः वचनैः विस्मितम् उत्फुल्लं चेतः चित्तं यस्य तथोक्तः स रामः कुशलवयोः करपद्मे, करयुग्मे इति वा पाठः, राज्यलक्ष्मीं निधाय समर्प्य सह-गमने समुत्काः समुत्सुकाः तैः लोकवृन्दैः पुरवासिसमूहैः

अथागतेषु वानरराक्षसेषु अनुगमार्थिषु वृत्तान्तः।

विभीषणहनूमन्तौ कृत्वा स चिरजीविनौ।
आकल्पं भूरिभोगाय निर्वर्त्यान्यान् सहानयत्॥ १४६॥

ततः सकलायोध्यापरिवृतः सरयूतटं गत्वा।

स्नात्वाऽसौ सारवेऽन्तःपयसि रघुपतिर्दिव्यदेहो विमाने
तावद्व्योम्नि स्थिरोऽभूदनुगमनकृतोत्साहभाजो जनास्ते।
यावत्कीटादयोऽपि प्रतिनवसरयूस्नाननिर्मुक्तदेहाः
स्नेहाद्ब्रह्मोपनीतान्यनवरतमहो व्योमयानान्युपेयुः॥ १४७॥

---

याचितः प्रभो! यत्र गच्छसि तत्रास्मानपि नयेत्येवं प्रार्थितः अतएव अतिकरुणम् अतिदयार्द्रं चित्तं यस्य तथाभूतः सन् तान् लोकान् तथैव अनुमेने अनुज्ञातवान्। मालिनी वृत्तम्॥ १४५॥

विभीषणेति। स रामः विभीषणहनूमन्तौ चिरजीविनौ कृत्वा आकल्पं प्रलयकालपर्य्यन्तं भूरिभोगाय यथेच्छसुख-भोगार्थं निर्वर्त्त्य निवार्य्य, संरक्ष्येत्यर्थः, अन्यान् कपिराक्षसान् सह, आत्मनेति शेषः, अनयत्, स्वर्गमिति शेषः। अनुष्टुप् वृत्तम्॥ १४६॥

स्नात्वेति। असौ रघुपतिः रामः सारवे सरयूसम्बन्धिनि अन्तःपयसि अन्तर्जले स्नात्वा अवगाह्य दिव्यदेहः सन् व्योम्नि आकाशे विमाने देवयाने तावत् स्थिरः निश्चलः अभूत्, यावत् अनुगमने कृतम् उत्साहमौत्सुक्यम्, अभिलाषमित्यर्थः, भजन्ते इति तथोक्ताः कीटादयः अपि जनाः जीवाः प्रतिनवेन अभि-नवेन सरयूस्नानेन निर्मुक्ताः त्यक्ताः देहः पार्थिवं कलेवरं यैः तथाभूताः सन्तः स्नेहात् अनुरागात् ब्रह्मणा उपनीतानि

एवं दोर्दण्डदर्पं दिशि दिशि परमाश्चर्य्यदं गापयित्वा
कृत्वा दुर्वृत्तशान्त्या त्रिभुवनमखिलं स्वस्वधर्म्मप्रवृत्तम्
भुक्त्वा राज्यं सहस्राधिकमयुतमहो वत्सरान् पूर्णकाम
सार्द्धं पौरैः समस्तैरगमदतिकृती राघवः स्वीयलोकम्

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमो यातोऽङ्क एवेत्य

समाप्तोऽयं ग्रन्थः ।

---

आनीतानि व्योमयानानि विमानानि अनवरतम् अ
उपजग्मुः, अहो आश्चर्य्यम् । स्रग्धरा वृत्तम् ॥ १४७

एवमिति । अतिकृती अतिकुशलः राघवः
एवम् इत्थं परमाश्चर्य्यदं दोर्दण्डदर्पं भुजबलगौरवं
कीर्त्तयित्वा विख्याप्येत्यर्थः, दुर्वृत्तानां दुराचाराण
दीनां शान्त्या संहारेण अखिलं समग्रं त्रिभुवनं स्व
रतं कृत्वा सहस्राधिकमयुतं वत्सरान् एकादश
इत्यर्थः, राज्यं भुक्त्वा पूर्णकामः सिद्धमनोरथः स
पुरवासिभिः सार्द्धं स्वीयलोकं विष्णुलोकं, वैकुण्ठमि
मत् जगाम । स्रग्धरा वृत्तम् ॥ १४८ ॥

एष इति । स्वर्गारोहणं नाम यस्य सः ॥ १४९ ॥

इति वि, ए, उपाधिधारिणा पण्डितकुलपति
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता म
व्याख्या समाप्ता ।

